श्रीः

# श्री रसगंगाधर मर्मप्रकाश मर्मोद्घाटनम्.

श्रीमन्नाल्वडि कृष्णभूपा स्थानविदुषा
जग्गूवेङ्कटाचार्येण
विरचितम्.



PRINTED BY V. B. SOOBBIAH & SONS
AT THE M. B. D. ELECTRIC PRINTING WORKS
BANGALORE CITY

1933

श्रीः

# श्री रसगंगाधर मर्मप्रकाश मर्मोद्घाटनम्.

श्रीमन्मालवडि कृष्णभूपा स्थानविदुषा
जग्गूवेङ्कटाचार्येण
विरचितम्

श्रीमान् सत्यव्रत-
शास्त्रि महोदयेभ्यः सादरं
समर्पितम् —
जग्गू सुदर्शनाचार्य
२२।२०८०



PRINTED BY V. B. SOOBBIAH & SONS
AT THE M. B. D. ELECTRIC PRINTING WORKS
BANGALORE CITY
1933

श्रीः.

## ग्रन्थकर्तु र्विज्ञापनम् .

---

रसगङ्गाधरकर्ता जगन्नाथपण्डित राजः, तैलङ्गान्वयः, वेगिनाडुकुलो त्पन्नः, महालक्ष्मी पेरुमभट्टयोरात्मजः, तस्मादेवावाप्तसकलशास्त्रः, शेषवीरेश्वर पण्डिताधिगतव्याकरणशास्त्रः, प्राप्तयौवनः, डिल्लीनगरेश्वरं षहजहाननामकं यवनराजं तत्सुतं दाराशाहञ्चा श्रित्य स्वविद्याकौशलेन "पण्डितराज" इति प्राप्तबिरुदः, क्रिस्ताब्दसप्तदशशतक स्योत्तरार्धे (१६६६) भुवमलञ्चकार । तत्प्र णीतेषु बहुषुग्रन्थेषु "रसगङ्गाधर" एवप्रबलः ॥

अस्य--रसगङ्गाधरस्य मर्मप्रकाशाख्य व्याख्याकर्ता नागेशभट्टः, महाराष्ट्रब्राह्मणः, शिवभट्टसतीदेव्योस्सुतः, गङ्गातीरस्थ शृङ्गिबेरपुराधीश रामनृपालाल्लब्धजीवनः, क्रिस्ताब्दाष्टादश शतकप्रथमपादे (१७१४) काश्या मासीत्.

नागेशभट्टस्य, रसगङ्गाधर व्याख्याकरणे कारणमेवं मुल्लीयते । प्रक्रि याप्रकाशाख्य ग्रन्थकर्ता, शेषश्री कृष्णपण्डितः । तच्छिष्यः भट्टोजिदीक्षीतः सिद्धान्तकौमुदीकर्ता । शेष श्रीकृष्णपण्डितस्य पुत्रः, शेषवीरेश्वरः। शेषवीरेश्व रस्य शिष्यःपण्डित जगन्नाथः । भट्टोजिदीक्षितस्तु मनोरमाख्ये स्वग्रन्थे स्वा चार्यग्रन्थं प्रक्रियाप्रकाशमदूषयत् । स्वप्राचार्य ग्रन्थं दूषितमसहमानः पण्डित जगन्नाथः भट्टोजिदीक्षितकृतांमनोरमां "मनोरमाकुचमर्दनाख्येन, ग्रन्थेन, खण्डयामास.

नागेशभट्टस्तु, भट्टोजिदीक्षितस्य पौत्रात् हरिदीक्षिताल्लब्ध व्याकरण शास्त्रः, स्वप्रप्राचार्यभट्टोजिदीक्षितग्रन्थं दूषितमसहमानः पण्डितजगन्नाथस्य, प्रबलं रसगङ्गाधरमेव दूषयितुंतद्व्याख्याव्याजेनारब्धवान्.

अतएव अत्रमर्मप्रकाशे मूलव्याख्यानस्यातिसंग्रहत्वेपि, यत्रयत्र अप्पयदीक्षितानांचित्रमीमांसाकुवलयानन्दौ दूषितौ, तत्रतत्र, "अत्रेदंचिन्त्यम्" इत्यादिना विस्तरतोदूष्यते रसगङ्गाधरः । अतएव " मर्मप्रकाश " इति साभिप्रायं नामनिबद्धम् ॥

नागेशभट्टविरचिताः प्रबन्धा इमे ॥

(१) मरमलघुमञ्जूषा. (२) लघुमञ्जूषा. (३) बृहन्मञ्जूषा. (४) लघुशब्देन्दुशेखरः (५), बृहच्छब्देन्दुशेखरः (६) परिभाषेन्दुशेखरः (७) भाष्यप्रदीपोद्योतः इतीमेव्याकरणग्रन्थाः । अलङ्कारशास्त्रेतु. (८) काव्यप्रकाशोद्योतः (९) काव्यप्रदीपोद्योतः (१०) रसगङ्गाधरमर्मप्रकाशः रसमञ्जरीटीका, (१२) रसतरङ्गिणीटीका । धर्मशास्त्रे (१३) प्रायश्चित्तेन्दुशेखरः (१४) सापिण्ड्यनिर्णयः । दर्शनेषु, (१५) सांख्यसूत्रवृत्तिः (१६) योगसूत्रवृत्तिः (१७) न्यायसूत्रवृत्तिः, (१८) वैशेषिकसूत्रवृत्तिः (१९) मीमांसासूत्रवृत्तिः, (२०) वेदान्तसूत्रवृत्तिः, (२१) वृत्तिसंग्रहः, (२२) सप्तशतीस्तोत्रटीका, (२३) स्वगुरुनाम्ना शब्दरत्नम्, (२४) स्वशिष्यनाम्ना अध्यात्मवाल्मीकीयरामायणयोः टीकाद्वयम् इति ॥

एवमनेकशास्त्रप्रबन्ध निबन्धन धुरंधरस्य, पण्डितवरेण्यस्य, परिमित गंभीरभाषिणः, अप्रतिमप्रतिभाजुषः, अस्यनागेशभट्टस्य, अस्मिन्मर्मप्रकाशा

एयेग्रन्थे, प्रवचनसमय समुल्लसिताः, पञ्चषा, विषयाः विचारितामयासि न्मर्मप्रकाशमर्मोद्घाटना'' एयेतिस्वल्पे निबन्धे, ''विवक्षितंह्यनुक्तमनुतापञ्जन यती'' तिमहा कविकालिदास वचनमनुसन्दधानेन; नतुस्वाहङ्कार प्रकाशकामे नेतिशम् ॥

सज्जनविधेयः

जग्गूवेङ्कटाचार्यः
साहित्यालङ्कार सांख्ययोगवेदान्त
विद्वान्. सांख्यतीर्थः.
राजास्थान विद्वान्.

स्थानम्
मेलुकोटे, यादवगिरिः

॥ श्रीः ॥

# श्री रसगंगाधर मर्मप्रकाश मर्मोद्घाटनम्.

रसगंगाधरकारेण पंडितजगन्नाथेन, अलंकारेण वस्तुध्वनिमुदाहरता, यथावेत्यादिना पद्यमेतल्लिखितम्—

"निर्भिद्य क्ष्मारुहाणामतिघनमुदरं येषु गोत्रांगतेषु
द्राघिष्ठ स्वर्णदंड भ्रमभृत मनसो हन्त धित्सन्ति पादान् ॥
यै स्संभिन्ने दलाग्रप्रचलहिमकणे दाडिमीबीजबुद्ध्या
चञ्चूचाञ्चल्य मञ्चन्ति च शुकशिशव स्तेंशवः पान्तु भानोः॥"
इति ॥

**समन्वय श्चैवं प्रतिपादितः**—"अत्र भ्रान्तिभूतां तिरश्चामप्येव मानन्दं जनयतीति, जगदानंदहेतु र्भगवानिति व्यज्यते ; एवंरूपाया भ्रान्ते र्लोकेऽपि संभवात्, स्वतस्संभवित्वं ॥" इति ॥

**अत्र मर्मप्रकाशाख्य टीकाकारो नागेशभट्टः—**

"अन्यदस्योदाहरणमाह-यथावेति ॥ ते रविकिरणाः, युष्मान् पान्तु। के? येषु, तरूणा मतिनिबिड मन्तःप्रदेशं विदार्य भूमिं गतेषु, अतिदीर्घ सुवर्णदंड सम्बन्धि भ्रमेण, भृत-पोषितं, मनः येषां-ते जनाः। हन्तेत्याश्चर्यम्, पादान्-किरणान, धित्संन्ति-धर्तुमिच्छंन्ति। किञ्च यैः संभिन्ने मिश्रिते, तरुपत्राग्र निष्ठ चञ्चलहिमकणे-या दाडिमीबीजस्यबुद्धिः-तया- चंचुचाञ्चल्यं ग्रहणार्थव्यापारं, अञ्चन्ति-कुर्वन्तीत्यर्थः, अत्र भ्रान्तिमानलंकारः-तेन व्यङ्ग्यमाह अत्रेति। अपिना-अतिरश्चाम्।" इति व्याख्यामाख्यत् ॥

अस्यतु व्याख्यातु रयंभावः - सूर्योदय समये निबिड तरुदळ विवर विसृतां स्तरणिकिरणान् जना स्सुवर्णदण्ड भ्रान्त्या ग्रहीतुं वाञ्छन्ति; यैः सूर्य किरणैः मिश्रिते तरुपत्राग्रस्थित हिमजलबिंदौ शुकशिशूनां दाडिमीफलबीज बुद्धिः; ते रविकिरणाः युष्मान्पान्तु । इति ॥

**अत्रेदंविचार्यते**—यत्तु, अत्र पूर्वार्धगतस्य धित्सन्तीति क्रियापदस्य कर्तृपदत्वेन "जनाः" इतिपदमध्याहृतम्--तदनुचितम्-उत्तरार्धक्रियाभूत अञ्चु धात्वर्थ कर्तृभूत शुकशिशूनामेव धित्सन्तीत्यत्रापि कर्तृत्वसंभवेन, अनध्याहा रेणैव संभवतिनिर्वाहे, अध्याहारपक्षस्य दुष्टत्वात्—

**तथाच**—शबरस्वामिवाक्यम् "लोकेयेष्वर्थेषु प्रसिद्धानि पदानि, तानि सतिसंभवे, तदर्थान्येव सूत्रेष्वभ्युपगन्तव्यानि; नाध्याहारादिभिरेषां परिकल्पनीयोर्थः परिभाषितव्योवा"—इति ॥

**यच्च**—पूर्वार्धगताया धित्सन्तीति क्रियायाः कर्मवाचकं, "पादान्" इति पदं प्रतीकतयोद्धृत्य, "किरणान्" इतिव्याख्यातम्—तदप्यनुचितम्-यत्तच्छब्द यो स्समानार्थकत्वेन सम्बन्धस्य, सर्वसंमतत्वेन, प्रकृते पूर्वार्धे "येषु" इति- उत्तरार्धेच "यैः" इति, यच्छब्देन किरणान्परामृश्य, तयोर्यच्छब्दयोर्मध्ये, यच्छब्दं विहाय पादशब्देन किरणानां ग्रहणस्या त्यन्तानुचितत्वात्- तथाहि यच्छब्देनैव किरणानां ग्रहणे सत्येव "तेंशवः" इत्यत्र, तच्छब्देन सहान्वय स्संभवति-प्रकृतेतु पादशब्देनैव किरणानां कथनात्, तेषांच धित्सन्तीति क्रियायां कर्मत्वेन अन्वितत्वा द्वाक्यार्थो विश्राम्यति । तथाच-"तेंशव" इति तच्छब्देन सहान्वयो नसंभवति ॥

**नच**—"येष्वि" ति यच्छब्दस्य, "तेंशव" इति तच्छब्देन सहान्व ये, न काचिदप्यनुपपत्ति रिति वाच्यम्.

"येष्वि"त्यस्य स्वर्णदंडभ्रमे, विषयतयाऽन्वितत्वेन, प्रक्रंस्यमान

वाचित्वादस्ययच्छब्दस्य, स्वतएवोपस्थितेन, पादानित्यस्य विशेषणीभूतेन "तान्' इति पदेन सह सम्बन्धान्निराकांक्षत्वा त्पुन स्तेंशव इति तच्छब्देन सहान्वयासंभवात् ॥

**तथाच**-"येषु स्वर्णदंडभ्रमः, ता न्किरणा न्गृहीतु मिच्छन्ति जनाः" इति वाक्यार्थेपूर्णे "तेंशव इत्यनेन वाक्येन सह सम्बन्धो नगृहीतुं शक्यते ॥

**यदिच**-पूर्वार्धोत्तरार्धयो र्भिन्नावेव वाक्यार्थौ, "येषुभ्रमः, तान्किर णा न्धित्सन्ति जनाः" "यै र्मिश्रिते हिमजलकणे शुकशिशूनां दाडिमीबीज बुद्धिः, ते अंशवः पान्त्विति" ॥

**तदा**-पूर्वार्धवर्णितानां किरणानाम्, उत्तरार्धगत मुख्यवाक्यार्थी भूत रक्षण कर्तृत्वान्वयायोगा दुद्देश्यासिद्धिः ॥

"संभवत्येकवाक्यत्वे वाक्यभेदस्तुनेष्यते" इति वाक्यभेद रूप वाक्य दोषापत्तिश्च ॥

**यच्च**-"धित्सन्ती" तिक्रियापदं प्रतीकतया गृहीत्वा, "धर्तु मिच्छन्ती" ति विवृतम् ॥

**तत्तु**-सुतरां वैयाकरण विस्मयावहम्-तथाहि - तौदादिकात् "धृङ् अवस्थाने" इति धातोस्सनि कृते "दिधरिषन्ते" इति रूपं - भौवादिकात्तु धृञ्धारणे" "धृङ् अवध्वंसने" इतिच धातोस्सनि "दिधीर्षन्ति" "दिधी र्षन्ते" इति वा रूपंनि ष्पद्यते ; "धित्सन्ती" ति तु रूपं जौहोत्यादिकात् "डुधाञ् धारणपोषणयो" रिति "धाञ्" धातो "स्सनिमीमे" त्यादि सूत्रान्निष्पद्यते विग्रहस्तु "धातुमिच्छन्ती" ति ॥

**तथाच**-- बृहन्मञ्जूषा - लघुमञ्जूषा - परमलघुमञ्जूषा-बृहच्छब्दे

न्दुशेखर लघुशब्देन्दुशेखर-परिभाषेन्दुशेखर - भाष्यप्रदीपोद्योता द्यनेक प्रामा णिक प्रौढ व्याकरण प्रबन्ध रचना धुरीणस्य। स्य नागेशभट्टस्य "धर्तुमि च्छन्ती" ति विवरणम्, प्रामादिक मिवप्रतिभाति ॥

**नच**--"धित्सन्ती" त्यस्य "धर्तुमिच्छन्ती" त्येतत्, अर्थानुवादमा त्रपरम्; नतु विग्रहवाक्य प्रदर्शनपरम्-येनोक्तदोपस्स्या दिति वाच्यं ॥

अर्थानुवादमात्रपरत्वे, "गृहीतुं वाञ्छन्ति" "आदातुमीहन्ते" "जिघृक्षन्ति" "आदित्सन्ति" इत्यादि रूपेणभाव्यं-नतु "धर्तुमिच्छ न्ती" ति - "धर्तुमिच्छन्ती" तितु प्रकृति प्रत्यय विभाग प्रदर्शन पूर्वक मर्थविवरणम् - विवरणम् नाम स्वसमानार्थक पदान्तरेणार्थकथनं - यथा "पचती" त्यस्य "पाकम्करोती" ति, "जीवती" त्यस्य, "प्राणान्धा रयती" त्यादि-

**यदिच**--बहुग्रन्थकर्तु रस्य सर्वप्रसिद्धं प्रामाणिकत्वम् परिरक्षितु मर्था नुवाद मात्र परत्व एवाग्रहः ॥

**तदापि**--"धित्सन्ती" त्यस्य, "धर्तुमिच्छन्ती" त्येत त्प्रकृति प्रत्यय विभाग प्रदर्शन पूर्वकम् विवरण मेवेति गृह्ण त्सहृदय हृदय मपि न कोपि निरोद्धुं शक्नुयादेव ॥

नाप्येत लेखक मुद्रापकादि प्रमाद कृत मिति शक्यम् वक्तुम् - द्वित्रा णाम् स्वराणाम् व्यंजनानाम् संयोगानाम्वा अधिकत्वे, न्यूनत्वे, विपर्यये वा तस्य वक्तुमशक्यत्वात्- नतु बुबोधयिषापूर्वक, तत्तदर्थावबोधकानुपूर्वीविशेषे ष्वपि ॥

**नच**--"धातुमिच्छन्ती" त्येव ग्रन्थकृत्संमतः पाठः-"धर्तुमिच्छन्ती" तितु लेखकस्य, मुद्रापकस्य, वादोषः,-"धातु" मित्यत्रधकारोत्तरस्य आकार स्य न्यूनत्वेन, "तुम्" इत्यस्मात्पूर्वं रेफस्याधिक्याच्च तथाभावादितिवाच्यम् ॥

**तथासति**--" जनाः किरणा न्वातुमिच्छन्ती " तिवाक्यस्य, स्वाभिमत ग्रहणेच्छारूपार्थानवबोधकत्वात् न्यूनतापत्तेः ॥

**यदपि**--उत्तरार्धावतरणिकान्तेन, " किञ्चे, त्युक्तम् तदपि, पूर्वोत्तरार्धयो र्भिन्नस्वतन्त्र वाक्यार्थद्वय प्रतिपादकत्व स्फोरणा त्पादशब्दार्थ विचार प्रस्तावोक्त दोषस्यैव दूरीकरणा दुपेक्षणीयम् ॥

**यदपि**--" हन्ते " त्यस्य " आश्चर्य " मितिव्याख्यानम्--तदप्यस्वरसम्-तथाहि-उदयसमय तरुदळ सरणि विसृत तरणिकिरण कनकयष्टि भ्रमण ग्रहणप्रवृत्त जनदर्शना त्खलुवक्तव्य माश्चर्य-जनानाम् नियमेन वृक्षाधोगमनम् मध्याह्न सम्भावित मातपबाधया-नतुप्रभाते-अतो नतत्र जनप्रसक्तिः-किञ्च-बुद्धिपूर्वक प्रवृत्तिमताम् जनानाम् वृक्षाधःप्रदेशे स्वर्णदण्ड प्रसक्ति रसम्भाविनैव-भ्रमोऽपिहि स्वोचित देशकालादिक मपेक्षते - नहि पेटिकानिक्षिप्त रशनादाम्नि मुग्धानामपि तमस्यपि सर्पत्वभ्रमः - नापि सूर्यातप निपतितायाम् रज्जौ सर्पत्वभ्रमः - किन्तु मन्दालोक वीथ्यादि निपतितायामेव - अत स्सुतराम् नतद्ग्रहणेच्छाप्रसक्तिः - तथाच नाश्चर्यप्रसङ्गः ॥

**अपिच**--उदाहृतश्लोकस्य अलङ्कारेण वस्तुध्वनित्व समन्वयोपपादनपरे " अत्रभ्रान्तिमता न्तिरश्चा मप्येवमानंदं जनयतीति जगदानंदहेतुर्भगवानिति व्यज्यते " इतिमूलकारवाक्ये " तिरश्चामपि " इत्यत्र व्याख्यात्रा " अपिना = अतिरश्चाम् " इति व्याख्यातमृयत् ; तदपि नविमर्दसहम् ॥

**तथाहि**--किमत्रवाच्यम् किंवाव्यंग्य मितिविचारे अलंकारेण वस्तुध्वने रुदाहरणा दलंकारस्य वाच्यत्वम्, भगवतस्सूर्यस्य जगदानंदहेतुत्वस्य व्यंग्यत्वंच वक्तव्यम् - तथैवचोक्तं व्याख्यात्रापि- "अत्रभ्रान्तिमानलंकारः-तेनव्यंगयमाह-अत्रेति " इतिग्रंथेन-अतश्चोक्तांशेनविवादः - किन्तु-अनुपदमेव, "अपिना= अतिरश्चाम् " इति यल्लिखितम् - तत्तु स्ववचनविरुद्धं-कुतइतिचेत्- अपिना=

तिरश्चामपीति मूलकारवाक्यघटकीभूतेन अपिशब्देन-"अतिरश्चाम्=तिर्यग्भि न्नानाम् - एवमानन्दम्जनयतीत्यनुषंगेण योजना कार्या ॥ एवंच-अपेस्समुच्चया र्थकत्वम् - तथाच-जगदानंदहेतुत्वस्य व्यंग्यत्वासिद्धिः - तिर्यगतिर्यग्घटित समु दायोहि, जगच्छब्दार्थः - तत्र तिरश्चामानंदहेतुत्वम् श्लोकस्योत्तरार्ध लभ्योवा च्यार्थः - अतिरश्चाम् (जनाना) मानंदहेतुत्वंतु पूर्वार्धलभ्योवाच्यार्थः- इत्थंच-तिर्यगतिर्यग्घटित समुदायरूप जगदानंदहेतुत्वस्य वाच्यार्थत्वा न्नव्यंग्यत्वं, इति कृत्वा, " तेनव्यंग्यमाहे" त्यादि पूर्वोक्त स्ववचन विरोधः स्फुटएव ॥

**नच**--"भ्रमभृतमनस" इति; "दाडिमीबीजबुध्या " इतिच, भ्रमस्य वाच्यत्वम् - वाच्यस्यैवालंकारत्वं- अतएवात्रभ्रान्तिमानलंकारः - व्यंग्यन्तु तिर श्चामतिरश्चाञ्चानंदहेतुत्वं - तिर्यगतिर्यग्घटितसमुदायस्यैव जगद्रूपत्वात् - तत्र तिर्यगानन्दहेतुत्व मुत्तरार्ध लभ्यो व्यंग्यार्थः-अतिर्यगानन्दहेतुत्वं पूर्वार्ध लभ्यो व्यंग्यार्थः - आनंदस्यो भयो रप्यर्धयो श्शब्दवाच्यत्वा भावा द्व्यंग्यत्वं - इतिवाच्यम् ॥

मूलकारवाक्ये " अत्र भ्रान्तिभृतां तिरश्चामप्येवमानन्दम् जनय तीति जगदानन्द हेतु र्भगवानिति व्यज्यत " इत्यत्र, " तिरश्चा मप्येव मानन्दम् जनयति " इति वाक्यानन्तर मितिकरणबलात्तस्य च हेत्वर्थकत्वा ज्जनयतीत्यंत वाच्यार्थः - " जगदानन्दहेतुर्भगवा " नित्यय मर्थो व्यंग्य इति च स्वरसतः प्रतीतेः ॥

तर्हि तिर्यगानन्दजनकत्वं कस्य शब्दस्य वाच्योर्थ इति चेत् भ्रान्ति वाचकयो स्स्वर्णदंडभ्रम दाडिमीबीज बुद्धि शब्दयो रेव वाच्यो र्थ इति गृहाण ॥

भ्रान्तेः कथमानंद रूपत्व ? मिति चेत् -- वृत्त्यवच्छिन्न चैतन्यस्यै वानंद रूपत्वात् भ्रांतेरपि वृत्तिविशेषत्वात् ॥

**नच**--भ्रान्त्या आनंदो जन्यते - नतु भ्रान्ति रेवानंदः इतिवाच्यम् ॥

आनंदस्य जडधर्मत्वाभावात्, चैतन्यैकरूपत्वात्, चैतन्यस्य नित्यत्वा च्च जन्यत्वानुपपत्तेः । अतएव " रत्याद्यवच्छिन्न चैतन्य मेव रसः " इत्यादि रसप्रकरणे द्रष्टव्यम् ॥

**एवमेव** चानुभवः ॥

श्लो ॥ मांसासृक्पूय विण्मूत्र पूरिता चर्मभस्त्रिका ।
नारी, कान्तेति हिभ्रान्तिः कामुकस्य सुखंभवेत् ॥
पूर्वोक्त भस्त्राज्ञानं तु यदा स्या त्तस घृणी भवेत् ।
मंदालोके समायान्तं पुमांसम् नीलकञ्चुकम् ॥
कान्ते ति मत्वा हृष्य न्स दृष्ट्वा निर्वेद माप्नुयात् ॥

**एवमेवात्रापि** शुकानां जनानां च यावद्दाडिमीबीज स्वर्णदंडभ्रम स्तावदेव सुखं, भ्रमकार्यभूत चञ्चूचांचल्यकाले ग्रहणकालेच जलकणानां विश कलीभावात् किरणानाममूर्तत्वेना ग्रहणाच्च दुःख मेव-नतु सुखलेशोपि ॥

**तथाच**--भगवत स्सूर्यस्यानंदहेतुत्वं नाम, उक्तयुक्त्यनुभवाभ्यां भ्रम-जनकत्वं तच्च शब्दवाच्यमेवेति जगदानंदहेतुत्वस्य वाच्यत्वा "तेनव्यंग्यमाह" इति स्ववचन विरोधः स्फुट एव-इति ॥

**सर्वस्या** अप्यस्या दोषपरंपराया मूल मेकं, यत्प्रथमं " जना " इति पदाध्याहारः । तन्मूलकं हि हन्ते त्यस्या श्चर्यार्थकत्वं-पादा नित्यस्य किरण वाचकत्वं, धितसंती त्यस्य धर्तुमिच्छन्तीति विवरणं, किंचे त्युत्तरार्धावतरणिका दानं, अपिना अतिरश्चा इत्य पेक्षसमुच्चयार्थकत्वं चे, त्येतत्सर्वं ॥

**अत्र यद्यपि**--जना इत्यध्याहारस्यापि मूलं मूलकारस्य पूर्वार्धे कर्तृ पदानिवेशरूपो दोष इति शक्यं वक्तुं ॥

**तथापि**--स दोषः कथंचि त्परिहापितो मूलकारेणैव, उत्तरार्धे "अंच न्तिचे" ति, क्रियापदाव्यवहितोत्तर मेव निवेशितेन, पूर्वार्धे गत धित्संती ति क्रियापद समुच्चायकेन च कारेण ॥

**किन्तु**--व्याख्यातुरेवायंदोषः यदुत्तरार्धगत क्रियापदाव्यवहितोतर च कारोपस्थिति पर्यन्त विलंब मप्यसहमानेन, धित्संती त्यनुपद मेव जना इत्यध्याहरता साहसं कृतं ॥

**वस्तुतस्तु**--शुकशिशव इति कर्तृपदस्य पूर्वार्धानिवेशः कवितायामीप दस्वारस्यं कवितापरिपक्वधियां सहृदयानां हृदय मारोहे दिति वयमुत्पश्यामः ॥

**इत्थम्** रसगंगाधर मर्मप्रकाशस्य मर्मोद्घाटितम् ॥

**अथेदानीं**--मूलकारतात्पर्यानुरोधिनी तदनुगुण पद रचनानुरूपा च व्याख्या लिख्यते ॥

**इदञ्च** पद्यं, जगन्नाथपंडितराज विरचितासु पंचसुलहरीषु सुधालहर्यां संदृब्धं। सुधालहरीविषयस्तु स्तुत्यतया सूर्यः। तत्किरणवर्णनपरं चेदं पद्यम् ॥

अत्राय मन्वयमुखश्श्लोकार्थः - अतिघनं - अत्यन्तगाढं, क्ष्मारुहाणां-वृक्षाणां, उदरं - मध्यप्रदेशं, निर्भिद्य-भित्वा, गोत्रां-भूमिं, गतेषु-प्राप्तेषु, येषु-सूर्यकिरणेषु, (विषये) द्राघिष्ठस्वर्णदंडभ्रम भृतमनसः - दीर्घतरसुवर्णयष्टिभ्रान्ति पोषितमनसः, शुकशिशवः-कीरपोताः, पादान् - स्वचरणान, धित्संति-धातुं विन्यसितुमिच्छन्ति, अर्थात् येषु किरणेष्वविकरणेष्वित्यनुषंगः हंते-त्यनुकंपायां, यैः-सूर्यकिरणैः, संभिन्ने - मिश्रिते, दळाग्र प्रचलहिमकणे - पत्राग्रस्थितचलतु हिनबिंदौ, दाडिमीबीजबुध्या-दाडिमीबीज भ्रमेण, चञ्चूचाञ्चल्यं-त्रोटिव्या पारं, अंचन्तिच-पूजयन्तिच-बहुमन्यन्ते इत्यर्थः वाञ्छन्तीति यावत्। "अञ्चु गति पूजनयो" रिति हि धातुः। ते भानो रंशवः पान्त्वि त्यर्थः ॥

अथ मभिसंधिः; मिहिरोदयसमये निबिडतर हरिततम तरुदळ विवर तिर्यग्विसृताः धरणिगता स्तरणिकिरणा स्तरुणा सुवर्ण सवर्णा दंडायमाना दृश्यंत इति तेषु शुकशिशव स्स्वचरणान्विन्यस्यन्तः किरणाना ममूर्तत्वा दाश्रय मलब्ध्वा खिद्यन्त इत्यनुकंपनीया भवन्ति। शुकशिशवो हि पंजरादावपि तिर्यक्प्रसृतं दंड मेवाधितिष्ठंती ति लोकाना मनुभवः। तथा तादृशसमये तरु पत्राग्र स्थित तुहिनबिंदो रेकत स्तरुणारुण किरणच्छुरणा दन्यत स्स्वाभावि काभास्वर शुक्ल रूपवत्त्वाच्च दाडिमीफल बीज भ्रान्त्या शुकशिशव स्तत्र चञ्चू र्वाचपारयितुं वांछन्ती ति ॥

अथ-उदाहृत श्लोके, अलंकारेण वस्तुध्वनि मुपपादयति अत्रेत्यादिना॥ अत्रभ्रान्तिमा नलंकारः, स न शब्दवाच्य एवे त्यत्र न चर्चा, उक्तव्याख्यानुसारेण पूर्वार्धोत्तरार्धाभ्या मपि तिरश्चामेव शुकशिशूनां भ्रान्तिजननादुक्तयुक्त्या भ्रांते रेवा नंदरूपत्वा त्तिर्यगानंदजनकत्वं वाच्यार्थः तिरश्चामपीत्यत्र अपि विरोधे बुद्धिपूर्वक प्रवृत्ति शून्यत्वा त्तिरश्चां आनंद जननाप्रसंगेपि विषयवैलक्षण्य प्रयुक्तानंदजनने बुद्धिपूर्वकप्रवृत्तिमतां जनाना मानंद जननं दंडापूपिका न्याय सिद्ध मिति, जगदानंदहेतुत्वं व्यंग्य मेवेति भावः इति॥

अस्या न्तु--व्याख्यायां-पूर्वोक्त दोषेषु न कस्यापि प्रसक्तिः ॥

तथाहि-पूर्वार्धगतधित्संती ति क्रियायाः कर्तृत्वेन शुकशिशूनामेवोपस्थि त्या नाध्याहारदोषः ॥

नापि—हन्तेत्याश्चर्यार्थकत्वस्य कोशासिद्धत्वदोषः- "हन्तहर्षेनुकंपायां वाक्यारंभ विषादयोरि" तिह्यमरसिद्धः-अस्मदुक्तव्याख्यायान्तु, अनुकंपार्थ कत्वे कोशसिद्धत्वंगुणः-वृक्षमूले प्रात र्जनाना मप्रसक्त्या, भ्रमस्यापि देश कालादि सापेक्षत्वेन, वृक्षाधस्स्वर्णदंडाप्रसक्त्या, बुद्धिपूर्वकप्रवृत्तिमतां जनानां तत्प्रयुक्ताश्चर्यस्य चा प्रसक्त्या, ये दोषा स्ते सर्वे परिहृताः विशेष तोऽर्थस्वारस्यंच ॥

**ननु**–बुद्धिपूर्वक प्रवृत्ति शून्यत्वा च्छुकशिशूनां स्वर्णदंडज्ञानं दाडिमी फलबीजज्ञानं च कथं संभवे दिति चेन्न -मनुष्यस्येव वस्तुविचारपूर्वक हेयोपादे यविवेक ज्ञानाभावेऽपि तिरश्चा माहारनिद्राभय मैथुनादिविषयेषु बुद्धि पूर्वक प्रवृत्ति मत्त्व दर्शनात्, प्रकृते च राजोद्याने स्वर्णपंजरे नानाफल दानेन पोषिताना मुपजात परिचयानां पंजरान्मुक्तानां शुकशिशूनां सर्णदंडभ्रमदाडि मीबीज भ्रमयोस्संभवात् ॥

पादान् स्वचरणान्, इति व्याख्यानेन किरणानां य च्छब्देनैव ग्राह्य त्वं - पादशब्देनग्रहणे वाक्यभेदप्रसंगः- तेंशवःपान्त्वित्युद्देश्यासिद्धिः ;– इत्यादि दोषाणां नप्रसक्तिः अर्थस्वारस्यं ;–"भ्रान्तिभृतां तिरश्चा" मित्यादि मूलकार वचनानुरोधः ; - इत्यादयो बहवोगुणाः ॥

**धित्संती** त्यस्य धातुमिच्छन्ती ति व्याख्यानाच्च, व्याकरणविरोध दोषः ; अर्थानुवादमात्र परत्व कल्पनादोषः ; इत्यादयो निरस्ताः स्वरस निर्वाहरूपो गुणश्च ॥

**ननु**–धातुमिच्छन्तीति व्याख्यानेऽपि धातुमित्यस्य, " निधातु " मित्यर्थ कल्पना दोष इति चेत् ॥

**न**–तादृशार्थे महाकवि प्रयोगदर्शनात् "धत्ते चक्षु मुकुलिनि रणत्को किले बालचूते" इति हि महाकवि भवभूतेः प्रयोगो मालतीमाधवे ॥

**किञ्च**--अपे स्समुच्चयार्थकत्वं परित्यज्य विरोधार्थकत्वेन व्याख्याना द्व्यंग्यासिद्धिदोष परिहारः ; मूलकारवचनानुरोधेन जगदानंद हेतुत्वस्य व्यंग्य त्व निर्वाहश्च ; इत्यदयो गुणाः ॥

**अथवा**–हन्त-हर्षे, तस्य, " धित्सन्ति " " अञ्चन्ति " चे त्युभ यत्र क्रियायां विशेषणतयाऽन्वयः तथाच-शुकशिशवः किरणेषु स्वर्णदंडभ्रमेण

स्वचरणान्हर्षेण विन्यसितु मिच्छन्ति ; हिमकणे दाडिमीबीज भ्रमेण हर्षेण चञ्चू वांचपारयितुमिच्छन्ति ; इत्यर्थः । हर्ष आनंदः-इत्थंच पूर्वोत्तरार्धाभ्यां तिरश्वां शुकशिशुना मानंदजनना त्तिर्यगानंदहेतु त्वं वाच्यार्थः - किंपुनर्न्या येन जगदानंदहेतुत्वं व्यंग्यार्थ इति तु निराबाधम् इति ॥

अथवेत्याद्युक्त व्याख्यायान्तु' भ्रात्यानन्दयोरैक्य संपादनाय, अद्वैत मतप्रक्रियावलंबन क्लेशो तदर्थं " मांसासृक्पूय " इत्याद्यनुभवोप पादनक्लेश ञ्च, विनैव, " भ्रान्त्या आनन्दोजन्यते " इति लोकानुभवानुसारेणैव, तिर्य गानन्दहेतुत्वस्यवाच्यत्वं, जगदानंदहेतुत्वस्यव्यंग्यत्वञ्च निरूढमत इतिस्वारस्यं इति ॥

"निर्भिद्ये" त्यादिपद्यञ्च, मुम्बइनगरस्थ निर्णयसागर मुद्रालय मुद्रित रसगङ्गाधर पुस्तकस्य १३९ तमेपुटेद्रष्टव्यम् ॥

---

एवमेव तत्रैव १७४ तमपुटे - पण्डित जगन्नाथेन, उपमालङ्कारप्रयो जकी भूतस्य साधारण धर्मस्य अनुगामित्व, बिम्बप्रतिबिम्बभावापन्नत्व, उभय विधत्व, वस्तुप्रतिवस्तुभावकरम्बितबिम्बप्रतिबिम्बभावापन्नत्व, असत्वेप्युपचरित त्व, केवलशब्दात्मकत्वैः, षोढाविभागः प्रदर्शितः । तत्रक्रमेणोदाहरणान्येवं लिखितम् ॥

" तत्राद्योयथा—

शरदिन्दुरिवाह्लादजनकोरघुनन्दनः ।
वनस्रजाविभातिस्मसेन्द्रचापइवाम्बुदः ॥

अत्रपूर्वार्धेसकृन्निर्देशाद्धर्मोनुगामी ।
केवलबिम्बप्रतिबिम्बभावापन्नः " कोमलातपशोणाभ्र "
इत्यत्रबोध्यः । द्वितीयार्धेतूभयम्" ॥ इत्यादि ॥

**अत्र**–मर्मप्रकाशे ॥

" द्वितीयार्धेतु-"काषायवसनोयातीत्यादौ " इति दृश्यते ॥

तच्चप्रामादिकम् । किन्तु " शरदिन्दुरिवे " त्यादिपद्योत्तरार्धे "वनस्र जाविभातिससेन्द्रचाप इवाम्बुदः इत्यत्र " इतिभाव्यम् ॥

**तथाहि**-" काषायवसनोयातिकुङ्कमालेपनोयतिः" इत्युत्तरार्धे, काष यवसनकुङ्कमालेपनयोर्यतिविशेषणत्वात् उपमायाएवाभावात् अनुगामिनः, बिम्बप्रतिबिम्बभावापन्नस्यवाधर्मस्या भावात् ॥

" वनस्रजा " इत्यादौतु भातीति भानरूपानुगामिधर्मस्य, वनस्रगिन्द्र चापयोर्बिम्बप्रतिबिम्बभावस्यच, सत्वादुभयविधधर्मवत्वम् ॥ इति ॥

---

**अन्यत्र**–१९१ तमेपुटे पण्डितजगन्नाथेन, उपमादोष कथनप्रस्तावे, उपमानोपमेययोः परिमाणत अननुरूपत्वं दोष इत्युक्त्वा, उदाहरणतया पद्य मेतल्लिखितम् ॥

"सरसिप्लवदाभातिजम्बीरं सुपचेलिमम् ।
आदिकारणतोयौघइवब्रह्माण्डमण्डलम् ॥ " इति ॥

अत्रमर्मप्रकाशे--"प्लवत्-चञ्चलम् , सुपचेलिमम् - अत्यन्तपक्कम् ॥ आ दिकारणेति ॥ " अपएवससर्जादौ तासुबीजमवासृजत " इतिश्रुते स्तत्वमिति भावः । अत्रप्रमाणत अनानुरूप्यम् । तयोरत्यन्तवैलक्षण्यात् । एतत्पोषकमपि सुपचेलिममितिविशेषणम् । पक्कस्यात्यन्तसूक्ष्मत्वात् " । इतिव्याख्यातम् ॥

**अत्रमूलकारस्या** यंभावः । सरोवरजलोपरिप्लवत् सुपक्कंजम्बीरफलमुपमे यम् । आदिसृष्टौकारणजलोपरिप्लवमानं ब्रह्माण्डमण्डलमुपमानम् । तयोर्जलो

परिप्लवमानत्व, वर्तुलत्व, स्वर्णवर्णत्वै, स्साम्यम् । ब्रह्माण्डस्य अनेककोटियोजन विस्तीर्णत्वात, जम्बीरफलस्या त्यल्पत्वाच्च, परिमाणतःपरमननुरूपत्वम् ॥इति॥

व्याख्यातुस्तु--जलोपरिचञ्चलं, शुष्कंजम्बीरफलं, पूर्वोक्तब्रह्माण्डमण्डलमिवेति ॥

अत्रप्लुवत्--इत्यस्य-चञ्चलं-इति व्याख्यानमनुपपन्नम् । सूर्यगोल, भूगोल, भगोलादेरिव, ब्रह्माण्डमण्डलस्य चञ्चलत्वे प्रमाणानुपलम्भात्तस्य साधारण धर्मत्वासंभवात् ॥

किञ्च--" अत्र-प्रमाणतः अनानुरूप्यम् । तयोरत्यन्तवैलक्षण्यात् " इत्येतावन्मात्रादेवोपपन्नेसमन्वये, "एतत्पोषकमपिसुपचेलिमभितिविशेषणम् । पक्वस्यात्यन्तसूक्ष्मत्वात् " इतिवाक्यद्वयम् कविहृदयानभिज्ञतां, लोकाननुभवं, स्वोदाहृतप्रमाणभूतमनुस्मृतिवाक्योत्तरार्धास्मरणं, तदर्थानवबोधञ्चव्याख्यातुः स्फोरयति ॥

**तथाहि**-- ब्रह्माण्ड जम्बीरयोः परिमाणकृतात्यन्ततारतम्यस्य सुस्पष्टत्वेन, जम्बीरस्यपक्वत्वेन सूक्ष्मत्वं संपाद्य, तेनप्रमाणतारतम्यप्रतिपादनमतीवास्वरसम् । जम्बीरफलेष्वेव, परस्परं परिमाण तारतम्यस्य विद्यमानत्वादल्पत्वविशेषणस्यैवौचित्याज्जम्बीरस्य सुपचेलिमत्व विशेण वैयर्थ्यापत्तेः । नच जम्बीरफलस्य पक्वत्वे, अतिसौक्ष्म्यंभवति । किन्तुरसाधिक्येन परिमाणाधिक्यस्यैवानुभवात । पक्वशब्दस्य, शुष्कार्थकत्वा संभवात् , संभवेऽपि शुष्कस्यजम्बीरस्य, धूसरवर्णत्वात् , निम्नोन्नतीभावाच्च, सुवर्णवर्णत्व, वर्तुलत्वयोरनुपपत्त्या सादृश्यस्यैवासंभवापत्तेः ॥

**किञ्च**--व्याख्यात्रा " अपएवससर्जे " त्यादिमनुवाक्यस्योदाहृतस्योत्तरार्धमेवंदृश्यते "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ इति

तथाचब्रह्माण्डस्य हैमत्वात्तत्सादृश्याय जम्बीरेसुपचेलिमत्वविशेषणम् । जम्बीरस्यशलाटुत्वेहरितत्वादर्धपक्वत्वे क्वचिद्धरितत्वादन्यतःपीतत्वाच्च सुवर्णवर्णत्वासंभवेनसादृश्यानुपपत्तेश्च सुपूर्वकत्वंपचेलिमशब्दस्य ॥

**इत्थञ्च**--व्याख्यातुःस्वोदाहृतवाक्योत्तरार्ध विस्मृतिः, स्मरणेपितदर्थानवबोधः, लोकेपक्वस्यजम्बीरस्यसूक्ष्मत्वमाननुभवेपि सूक्ष्मत्वकथनाल्लोकानुभवविरोधः, परिमाणतोननुरूपत्वोपपादनसमयेतदन्यांशेपि अननुरूपत्वप्रदर्शने, सादृश्यस्यैवासंभवादुपमाप्रसक्ते रेवाभावा दुपमादोषत्वस्यैवाप्रसक्त्या मूलोच्छेदापत्तिरित्यादयोदोषाः पारंपर्यमाश्रयन्ते ॥

**किञ्च**-"पक्वस्यात्यन्तसूक्ष्मत्वात्" इत्यतोनन्तरमेव, "किञ्चित्पदेति" इति प्रतीकंगृहीत्वा, "इवप्लवत्पदयोरित्यर्थः । सरसीवसमाभाति प्लवद्ब्रह्माण्डमण्डलम्, इतियावत्" इतिवर्तते ॥

**अत्र**—सरसीवे, त्याद्युक्तानुपूर्व्या एकार्थत्वे, उपमानोपमेयभाववैपरीत्यालाभात् वाक्यद्वयरूपत्वमङ्गीकरणीयम् । तथाचैवंपद्यंनिष्पद्यते ॥

"आदिकारणतोयौघेप्लवद्ब्रह्माण्डमण्डलं ।
सरसीवसमाभातिजम्बीरंसुपचेलिमम्" ॥ इति ॥

---

३१३ तमेपुटे पण्डित जगन्नाथेन प्रयोजकप्रयोज्ययोः पौर्वापर्य विपर्ययरूपातिशयोक्तेः, प्रयोजकप्रयोज्ययो स्सहभावात् प्रयोजकस्य प्रयोज्यानन्तर भावाच्च द्वेधाविभागं प्रदर्श्य, द्वितीयस्योदाहरणतया पद्यमिदमुदाहृतम् ॥

श्लो ॥ "पुरःपुरस्तादरिभूपतीनां भवन्तिभूवल्लभ भस्मशेषाः ।
अनन्तरन्ते भ्रुकुटीविटङ्का त्स्फुरन्तिरोषानलविस्फुलिङ्गाः" इति ॥

अस्यचैवं व्याख्या व्यलेखि नागेशभट्टेन ॥ " पुरइति " राजवर्णनमिदम् । हे भूवल्लभ, पुरःपुरस्तात्- पूर्वं पूर्वं, शत्रुरूपाणांराज्ञां भस्मरूपाः शेषा अवशेषाभवन्ति, पश्चात्तव भ्रकुट्येव विटङ्कम् कपोतपालिका, तस्मात्कोपरूपाग्ने र्विस्फुलिङ्गाः स्फुरन्तीत्यर्थः " इति ॥

अस्यां व्याख्याया मस्वारस्योद्भावनाय, प्रथममया व्याख्यायतेपद्यम्।

हे भूवल्लभ ! अरिभूपतीनां त्वदीय शत्रुभूपालानां, पुरः - नगराणि, पुरस्तात्-प्रथमं, भस्मशेषत्व प्रयोजकी भूतभवद्भ्रुकुटीविटङ्क विनिस्सृत रोषाग्नि कणस्फुरणात्पूर्वमेव, भस्मशेषाः - भस्मैवशेषः - अवशिष्टांशः, यासाम् ; तादृशा भवन्ति - नगराणि भस्मीभवन्तीतियावत् । अनन्तरम्-कार्यभूतशत्रुभूपनगरभस्मीभावानन्तरम् , भ्रुकुटीविटङ्कात् रोषानलविस्फुलिङ्गाः स्फुरन्ति-भवद्भ्रुकुटीभङ्गाद्रोषाग्निकणाः स्फुरन्ति प्रकाशन्ते, इत्यर्थः ॥ अत्रनगरभस्मीभावहेतुभूतरोषाग्नि कणापेक्षया, भस्मीभावस्यैवपूर्वं भावित्वकथनादुक्तरूपा, अतिशयोक्तिः ॥ इति भावः । इति ॥

नागेशभट्ट व्याख्यानेन, तस्यायंभाव उन्नीयते । " शत्रुभूपाएव पूर्वं पूर्वं भस्मीभवन्ति, ततोभवद्भ्रुकुट्यारोषानलविस्फुलिङ्गाः प्रभवंतीति ॥

**अयञ्च**—भावः, श्लोकस्थेनकेनशब्देन केनान्वयप्रकारेण लभ्यत इतिविचारणीयम् ॥

" भस्मशेषा " इतिपदे, बहुव्रीहिसमासाश्रयणे, " अरिभूपतीना " मितिषष्ठीविभक्ते रनन्वयः । तदा" अरिभूपतय " इति भाव्यम् । " शत्रुरूपाणांराज्ञांभस्मरूपाश्शेषाभवन्ती " ति तत्कृत व्याख्यानेपि, राज्ञामितिषष्ठ्याश्शेषाइत्यत्रान्वये, शेषाइत्यस्य, उद्देश्यसमर्पकत्वे, राज्ञांशेषाः कीदृशाभवन्तीति जिज्ञासायां विधेय समर्पकपदाभावात् वाक्यार्थानिष्पत्तिः । " भस्मशेषा "

इत्यस्य विधेय समर्पकत्वे, के ? भस्मशेषाभवन्तीत्याकाङ्क्षाजायते । नतुकेषा ? मिति । तथाच- राज्ञामितिषष्ठ्यनुपपत्तिः ॥

**अथ**--राज्ञामितिषष्ठ्याः "भस्मे" तिभिन्नपदेअन्वयः । तथाच- "राज संबन्धिभस्म" इतिउद्देश्य समर्पकं " शेषा " इति विधेयवाचकं पदम् एवञ्च नान्वयानुपपत्तिः। तथाचराजानोभस्मीभवन्तीतितात्पर्यलाभः ॥ इति ॥

**तन्न**--तदा, राज्ञांभस्म, शेषंभवतीति वक्तव्यंस्यात् । उद्देश्यविधेयवाचकयोस्समानविभक्तिवचनकत्वस्यन्याय्यत्वात् ॥

**यदिच**-" वेदाःप्रमाण " मितिवत् भिन्नवचनत्वेप्युद्देश्यविधेयभाव इष्यते । तदापि । " वेदाःप्रमाण " मितिदृष्टान्तप्रदर्शन मयुक्तम् ॥

वेदशब्दस्यनित्यपुल्लिंगत्वात् , प्रमाणशब्दस्य करणल्युडन्तत्वेन, नपुंसकत्वाच्चतादृशप्रयोगः। शेषशब्दस्यतुत्रिलिङ्गत्वात्, भस्म,शेषंभवती त्येववक्तव्यम् ॥

**यदिच**--उक्तदोषान्सर्वानसतः कृत्वाउक्तोद्देश्य विधेयभावमवलंब्य उक्ततात्पर्यंगृह्यते ॥

**तदापि**--"पुरःपुरस्तात्" इतिपदद्वयस्य ऐकपद्यमङ्गीकृत्य, "पूर्वंपूर्वं" इतिद्विर्भावापन्नपूर्वशब्देनविवरणम, वैयाकरणाना मतीव हास्या स्पदम् ॥

**कुतइतिचेत्**--"सर्वस्यद्वे" इतिसूत्रेण "पुरःपुरः" इति " पुरस्तात्पुरस्ता"-दितिवाद्विर्भावस्य युक्तत्वेन अम् प्रत्ययान्त, अस्ताति प्रत्ययान्तपदयोः द्विर्भावकथनं असांप्रदायिकत्वा द्वैयाकरण विस्मयावहमिवभाति ॥

---

श्लो॥ श्रीमन्नाल्वडिकृष्णराजनृपते रास्थानविद्वानयं
जग्गूवेंकटसूरिरेन मलिखत्संदर्भमत्यद्भुतं ।
यत्रश्री रसजाह्नवीभर वचोमर्मप्रकाशेकृतौ
नागेशस्य विशेषतः प्रकटिता दोषावलिर्नूतना ॥

सांख्ये·योगे किंचवेदान्तशास्त्रे·साहित्येचालंकृतौ पंडितोयः ॥
वंगेदेशे सांख्यतीर्थश्चयोभूत् सोयंजग्गूवेंकटार्योस्यकर्ता ॥

जीयान्महीशूरदेशाधिपः कृष्णभूपः
जीयासुरेतंनपुष्टाःकवीशास्स्वधर्मे ।
जीयासुरेभिःप्रक्लृप्ताःप्रबन्धाविदेशे
जीयात्सदेवोजगद्येनसृष्टंविचित्रम् ॥

इति श्रीकौशिककुलतिलक श्री शिङ्गरार्यतनूभुवः सदाचार्य समधिगत साहित्यालङ्कार, सांख्य, योग, वेदान्तादि, वैदुष्यस्य, कलिकातानगरीसमासादित सांख्य तीर्थोपाधेः श्रीयादवगिरि संस्कृत शास्त्रमहापाठशालाध्यापकस्य, श्रीमन्महीशूरसंस्थानाधिपति श्रीमन्नाल्वडिकृष्ण भूपास्थानविदुषः श्रीयदुगिरि नित्यवासिनो जग्गूवेङ्कटाचार्यस्य, कृतिषु रसगङ्गाधरमर्मप्रकाश मर्मोद्घाटनम्

समाप्तम्.

## एतद्ग्रन्थकर्तृ विरचिताः प्रबन्धाः.

---

१ भारतकृष्णमङ्गलाशासनम्

२ सुदर्शन मङ्गलाशासनम्

३ केशवादि द्वादशमूर्तिस्तोत्रम्

४ पुरुषकार वैभवम् ॥ (लक्ष्मीस्तोत्रम्)

५ कृष्णराजसागर सेतुबन्धः (कावेरी महिमादर्शः)

६ व्याघ्रतटाक भूविवरवर्णनम् ॥ (इरविन्केनाल्)

## दिव्यसूरीचरितेषु

---

७ भक्ताङ्घ्रिरेणुचरितम्

८ भक्तिसारचरितम्

९ भट्टनाथचरितम्

१० गोदाचरितम्

११ श्रीवत्साङ्कचरितम्

१२ श्रीयदुगिरिरामानुजमन्दस्मितवर्णनम्

१३ सूर्यादिग्रहान्योक्तिः ॥

---

9